प्रवेशाक्षेपनिष्क्रामप्रासादिकमथान्तरम्।
इति पञ्चविधं गा(स्था)[1]नं केचिदाहुर्मनीषिणः॥

षट्कलाऽष्टकला चेति प्रमाणमिति कथ्यते।
प्रकारः स प्रयोगो यः समार्धविषमादिकः॥

५ ध्रुवाविधाने कथितं नाम ज्ञेयं ध्रुवागतम्।
स्वेच्छा[2]नामानि कतिचिद्धियावृत्तविशेषतः॥

गीतरोदनसम्भ्रान्तिप्रेषणोत्पात[3]विस्मयाः।
यत्र यत्र ध्रुवास्तत्र न योज्या नाट्य[4]योक्तृभिः॥

यानि गीतकलाङ्गानि नाना[5]तोद्यानि तान्यथ।
१० विज्ञेयानि ध्रुवासुष्ठु[6]वृत्तैश्छन्दोगतैरिह॥

नास्ति किञ्चिदवृत्तं यद्वाद्यमान[7]कृताश्रयम्[8]।
गानं यद्वृ[9]त्ततो वाद्यं तद्वृ[10]त्तेन प्रयोजयेत्॥

छन्दोवृत्तानि सर्वाणि विज्ञेयानि ध्रुवास्विह।
यद्वृत्तप्रभवं [11]वाद्यमङ्गवाद्यसमं तथा॥

१५ पूर्वरङ्गान्त[12]तो वाद्यं ततो नृत्तं प्रयोजयेत्।
गीतवाद्याङ्गसंयोगः प्रयोग इति कथ्यते॥

भाषा च शौरसेनीति ध्रुवाणाम[13]भिधीयते।
दिव्यानां सप्रमाणं च ज्ञेयं संस्कृतभाषया॥

गानं मर्त्यस्य कथितमर्धसंस्कृतभाषया।
२० छन्दःप्रमाणसंयुक्तं स्तुत्याशीर्वादसंयुतम्॥

देवद्विजमहीपानां संस्कृतं गानमिष्यते।
वैश्यानां तु भवेद्गानमर्धप्राकृतसंस्कृतैः॥

---

1 A ज्ञा। D धाज्ञानां गानमा। 2 B स्वैश्व। 3 A प्रोक्षणोक्या। 4 D योज्या नाट्यप्रयोक्तृभिः। 5 C न्ना। 6 A B D स्वादु। 7 A वाभ्यज्ञादि। 8 B याः। 9 B न्नू। 10 A मद्व। 11 A संतु भवेद्वा। 12 A वै गानन्त। 13 B C नामा।

पैशाच्या भाषया गानं शूद्राणां मागधी तु वा[1] ।
इतरेषामपभ्रंशभाषया गानमिष्यते ॥

अपभ्रष्टा विभाषा वा शकारादेरुदीर्यते ।
उपमेयगुणा ये स्युः[2] नेत्रादीनां गुणाश्रयाः ॥

५ उत्तमाधममध्यानां स्त्रीणामपि च तत्त्वतः ।
यथावदवगम्यैते प्रयोज्या नाट्यकोविदैः ॥

नेत्रादेर्दैवतौपम्ये सूर्याग्निपवनाः स्मृताः ।
रक्षोदैत्योद्धतानां च मेघपर्वतसागराः ॥

सिद्धगन्धर्वयक्षादेः कुञ्जरर्षभशाखिनः ।
१० राजहंसर्षभगजशार्दूलाः पृथिवीभुजाम्[3] ॥

एत एव प्रयोज्याः स्युरुदात्तोत्तम[4]योरपि ।
नागशार्दूलवृषभाश्च दिव्येषु प्रयोजयेत् ॥

क्रव्यादा महिषर्क्षाश्च विप्रा[5]णां रुरवः स्मृताः ।
सारसाः शिखिनः क्रौञ्चाश्चक्राह्वाः कुमुदाकराः ॥

१५ [6]मध्यमैरुपमेयाः स्युः प्रयोज्या नाट्यकर्मणि ।
कोकिलाः षट्पदाः काका बकाश्चाषाश्च कौशिकाः ॥

अध[7]मैरुपमेयाः स्युस्तत्तदर्थानुकूलतः ।
शर्वरी वसुधा ज्योत्स्ना पद्मिनी द्यौः करेणुका ॥

नायिकानामुदात्तानामुपमेयगुणाः स्मृताः ।
२० दीर्घिका कलिका मल्ली सारसी शिखिनी मृगी ॥

नायिकानां मध्यमानामुपमेयाः स्युरर्थतः ।
भ्रमरी कुररी काकी परपुष्टा च मालिका ॥

---

1 A B C च तु । 2 B णे येस्युः । 3 B जः । C मृता । 4 B C न्मत्त । 5 B C हिंसा । 6 C omits two lines । 7 C उत्त ।

वेश्यानामधमानां स्युरुपमेयगुणा अमी ।
यद्वस्तु सुभगं हृद्यम्मतं दैवतमानुषैः ॥

उपमेयं भवेत्तच्च[1] गीतवृत्ति[2]षु गायनैः ।
एवं विभाव्य भरतैर्यथाभावं यथारसम् ॥

५ यथार्थमेतन्नाट्यं च प्रयोज्योऽभिनयः सदा ।
वृक्षत्वशिंशुपात्वादेर्यथा तादात्म्यमुच्यते ॥

तथा[3] भवेत्काव्यबन्धे तादात्म्यं रसभावयोः ।
वागङ्गसत्त्वाभिनया[4] भावाः स्युर्नाट्यकोविदैः ॥

रसोऽभिनेयो वागङ्गसत्त्वाहार्य[5]समुच्चयात् ।
१० उभौ पदार्थवाक्यार्थवाच्यौ भवितुमर्हतः ॥

स्थायी वा सात्त्विको वापि सञ्चारी वा क्वचित्क्वचित् ।
भावो वाक्यार्थतामेति तत्तद्भावविशेषतः ॥

केवलं न रसः काव्ये वाक्यार्थत्वमुपैष्यति ।
अलङ्कारोऽपि वाक्यार्थः स्याद्गुणोऽपि च वाक्यतः[6] ॥

१५ वाक्यवाक्यार्थवशतो ध्वन्यन्ते तेऽपि कुत्रचित् ।
भावा रसाश्च योज्यास्स्युर्नृत्यनृत्तात्मना नटैः[7] ॥

उदाहरणमेतेषां दिङ्मात्रमभिधीयते ।
तादात्म्यं भावरसयोर्भारविः स्पष्टमूचिवान् ॥

यथा—

२० 'प्रियेऽपरा यच्छति वाचमुन्मुखी
निबद्धदृष्टिः शिथिलाकुलोच्चया ॥
समादधे नांशुकमाहितं वृथा
विवेद पुष्पेषु न पाणिपल्लवम् ॥'

---

1 D भाव्ये। 2 A नृत्ते। 3 A यथा C तदा। 4 A यो C ये। 5 B भाव। 6 A कार्यतः। C काव्यतः। 7 B नुगैः।

वार्चं यच्छतः प्रियस्यावलोकनायोन्मुख्या निबद्धदृष्टित्वश्लथ-केशपाशत्वपुष्पस्पर्शानभिज्ञत्वविभाव्यमानस्तम्भसम्भ्रमाङ्गसादादि[A]-भावैः सम्भोगश्रृङ्गारः प्रकाश्यत इति तादात्म्यम् ॥

वाक्यार्थता स्थायिनोऽपि कालिदासेन दर्शिता ॥

५ 'व्याहृता प्रतिवचो न सन्दधे गन्तुमैच्छदवलम्बितांशुका ।
सेवते स्म शयनं पराङ्मुखी सा तथापि रतये पिनाकिनः ॥'

एभिर्भावविशेषैरेषा रतयेऽभूदिति स्थायिनो वाक्यार्थता ।
सात्त्विकभावस्य वाक्यार्थता यथा—

'प्रयच्छतोच्चैः कुसुमानी'ति भारविदर्शिता ।

१० बाष्पाकुललोचनत्वं सात्त्विको भावः ।

बृहद्बकुलवीथ्यां सञ्चारिणां वाक्यार्थता यथा—'गमनमलसं शून्या दृष्टि'रित्यादि अत्र सञ्चारिण एव वाक्यार्थः । 'पाणिपीडनविधेरनन्तर'मित्यत्र कामदोहृदसुखमन्वभूदिति सम्भोगश्रृङ्गारो वाक्यार्थः । 'गगनं गगनाकारं सागरः
१५ सागरोपमः' इत्यत्र उपमाऽलङ्कार एव वाक्यार्थः । 'अधरः-किसलयरागः कोमलविटपानुकारिणा'वित्यत्र रूपकालङ्कार एव वाक्यार्थः । एवमुभयालङ्कारा ऊह्याः ॥

शब्दो गुणी भवेत्स्वस्ववाच्यार्थगुणगौरवात् ।

२० यथा—'तन्वी श्यामा शिखरिदशने'त्यत्रालम्बनगतविशिष्टगुणाभिधायकतया प्रसादाख्यः शाब्दो गुणविशेषो वाक्यार्थ इत्यवगम्यते ।

यथाक्रममथैतेषां ध्वनिवाक्यार्थतोच्यते ॥

A स्यसात्त्विक ।

'यान्त्या मुहुर्वलितकन्धरमाननं त'दित्यत्र 'हृदये गाढं निहितः कटाक्ष' इत्यत्र च वाक्यार्थे उभयोरपि स्थायिनी रतिर्वाक्यार्थतया व्यज्यते।

[1]जाओ सोवि विलक्खो मए वि हसिऊण गाढमुपगूढो।
५ पढमोसरिअस्स णिअसणस्स गण्ठिं विमग्गन्तो ॥

अत्र सोऽपि विलक्षो जात इति वाक्यार्थादङ्गसाद्वैवर्ण्यादि सात्त्विकविशेषो व्यज्यते।

निशि निशि विरहे तव प्रियाया
भवति विलोचनमिन्दुकान्तली[1]लम्।
१० भवति च वदनं सरोजमस्या
बिसतनुसूत्रसमा तनुश्च तन्वी[2] ॥

अत्र लोचनमिन्दुकान्तं भवति वदनं सरोजं भवति बिससूत्रसमा तनुरिति वाक्यैः बाष्पजाड्यकार्श्यपाण्डि-मोद्वाम्यव्याध्यादयो भावा व्यज्यन्ते इति सञ्चारिणां १५ ध्वनितास्थितिः प्रदर्श्यते ॥

[2]अहअं लज्जालुइणी तस्सअ उम्मच्छराइ[3] पेम्माइ।
सहिआअणो वि णि[4]उणो हलाओ किं पाअराएण ॥

अत्र सख्यः किं पादरागेणेति निषेधरूपाद्वाक्यादुभ-योरपि सम्भोगसम्पद्व्यज्यत। इति रसध्वनिः।

१. जातः सोऽपि विलक्षो मयाऽपि हसित्वा गाढमुपगूढः। प्रथमापसृतस्य निवसनस्य ग्रन्थि विमार्गयमाणः॥ २. अहं लज्जालुस्तस्य चोन्मत्सराणि प्रेमाणि। सखीजनोऽपि निपुणोऽपगच्छ किं पादरागेण॥

1 A नी। 2 C न पाण्डुगात्रम्। 3 A उम्मुस वरा। C इमस्सि परा। 4 C अं भणिउ।

'लावण्यसिन्धुरपरैव हि केयमत्र
यत्रोत्पलानि शशिना सह सम्प्लवन्ते ।
उन्मज्जति द्विरदकुम्भतटी च यत्र
यत्रापरे कदलिकाण्डमृणालदण्डाः ॥'

५ अत्रोपमानभूतोत्पलशशिद्विरदकुम्भकदलकाण्डमृणालदण्डै-रुपमेया नेत्रवक्त्रस्तनोरुबाहा[1] व्यज्यन्त इति कदाचिदलङ्कारोऽपि ध्वनिर्भवति ॥

'समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव ।
विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः ॥'

१० एतैरुपमानैः सर्वसत्त्वाश्रययोग्यत्वस्थिरप्रतिज्ञत्वविपत्प्रतीकारसामर्थ्यसर्वाभिगम्यत्वादयो व्यज्यन्त इत्यलङ्कारोऽपि व्यञ्जकः ।

'महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः ।
स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रतः ॥'

१५ अत्रार्थगुणना[2]म्ना शब्दविशेषेण स्वस्ववाच्य[3]गुणाश्रयभूतसमवायिमहाबलत्वदुरवगाहत्वापराधसहत्वसत्यवादित्वानतिलङ्घनीयत्वसर्वस्वदानक्षमत्वाभेद्यत्वादयोऽर्था व्यज्यन्ते । अत्र गुणगुणिनोस्तादात्म्याद्गुणा अपि व्यज्यन्त इत्यर्थः ।

ईदृगर्थाश्च दृश्यन्ते प्रबन्धेषु महाकवेः ॥
२० नृत्तनृत्यविभागोऽयं विज्ञेयो नाट्यकोविदैः ॥
नृत्तनृत्यविभागात्मा नाट्ये योऽभिनयो भवेत् ।
स मार्गसंज्ञां लभते सर्वातोद्यसमन्वितः ।
सुकुमारप्रयोज्यं यत्तन्नृत्य[4]मिति कथ्यते ॥
[5]प्रयोज्यमुद्धतं यत्तु तन्नृत्तमिति कथ्यते ।
२५ नृत्यप्राधान्यतो नाट्यप्रयोगो रूपकादिषु ॥
प्रयोगस्तोटकादीनां नृत्यप्राधान्यतो भवेत् ।
उभयत्र प्रयोक्तव्यं देशरीतियुतं नटैः ॥

---

1 B पादा। 2 A व्यक्तिना। 3 C व्यञ्जयत्व। 4 A त्त। 5 B omits this line।

विशेषतस्तोटकादि देशरीतिमथुच्यते।
देशभाषाक्रियायुक्तं गीते वाद्ये च नर्तने ॥

तोटकादि प्रयोक्तव्यं नटैर्नाट्यविशारदैः।
देशान्पृथग्विजानीयान्नटस्तद्रीतिविस्तये ॥

५ देशो भारतवर्षाख्यो नवसाहस्रयोजनः।
आसेतोरा हिमगिरेरायामः परिकीर्तितः ॥

तारः पूर्वापराद्यन्तः सप्तसाहस्रयोजनः।
वसन्ति मर्त्याः सर्वत्र प्राप्ते कृतयुगे सुखम् ॥

त्रेतायुगे द्वापरे च हिमाक्रान्तिभयाज्जनाः।
१० पादं पादं विसृज्यैते श्रयन्ते दक्षिणापथम् ॥

योजनानां सहस्रे द्वे सपञ्चाशच्छतद्वयम्।
प्राप्ते कलियुगे मर्त्याश्चरन्ति वसुधातले ॥

यक्षा विद्याधराः सिद्धा गन्धर्वाश्च महर्षयः।
क्रीडन्ति स्त्रीगणैः सार्धमुत्तरापथभूमिषु ॥

१५ अस्य भारतवर्षस्य चतुर्थो दक्षिणापथः।
चतुष्षष्टिभिदाभिन्नो नानाजनपदाश्रयः ॥

पाण्ड्याः सकेरलाश्चोलाः सिन्धुसिंहलपामराः।
कलिङ्गयवनम्लेच्छपारसीकशकाह्वयाः ॥

गौडलाटविदर्भाश्च कामरूपान्ध्रकोङ्कणाः।
२० कर्णाटसुह्मकाम्भोजहूणकारूशगुर्जराः ॥

ससौराष्ट्रमहाराष्ट्रहिम्मीरावन्त्यनूपजाः।
अङ्गा वङ्गाश्च वङ्गालाः काशीकोसलमैथिलाः ॥

किरातवर्ध्रकारट्टकुरुपाञ्चालकेकयाः ।
औड्रमागधसौवीरदशार्णमगधाह्वयाः ॥

नेपालजैनबाह्लीकपल्लवक्रथकैशिकाः ।
सुशूरसेनकाजानकारूशयवनादयः ॥

५ यदवश्चक्रकुरवपार्वतीयाः सहैमनाः ।
काश्मीरमरुकेङ्का[1]णनग्नाश्च सहमङ्कणाः ॥

महेन्द्रदुहितुस्स्रोतोरेते मध्यमुपाश्रिताः ।
एतेऽष्टादशभिर्भाषाभे[2]देर्व्यवहरन्ति च ॥

ता भाषास्तेषु केषाञ्चिद्देशानां नामभिः कृताः ।
१० द्रमिडाः कन्नडान्ध्राश्च हूणहिम्मीरसिंहलाः ॥

पल्लवा यवना जैनाः पार्वतीयाः सपामराः ।
कषवर्ध्रककाम्भोजशकनग्नाः सवाकटाः ॥

एतेऽष्टादशभाषाणामाश्रयाः सहकोङ्कणाः ।
एता भाषाश्च सर्वत्र म्लेच्छभाषेत्युदाहृताः ॥

१५ तत्तद्देशेषु सङ्गीतं तत्तद्भाषाभिरन्वितम् ।
देशीति देशिकमपि कथयन्ति मनीषिणः ॥

भाषा नाट्योपयोगिन्यः स्युः षट्पञ्चाथ सप्त वा ।
संस्कृतप्राकृताख्या च पैशाची मागधी तथा ॥

शौरसेनीति पञ्च स्युरपभ्रंशयुताश्च षट् ।
२० अपभ्रंशाह्वयां भाषां सप्तमीमपरे विदुः ॥

एता नागरकग्राम्योपनागरकभेदतः ।
त्रिधा भवेयुरेतासां व्यवहारो विशेषतः ॥

एवं देशविभागांश्च देशभाषा दशाष्ट च ।
देश्योपचारान्देश्यांश्च तालान्सङ्गीतकानि च ॥

1 A कोङ्क । 2 A B D भाषाणां भे ।

सङ्ख्याश्च परिवर्तानां गीते मात्राः कलाकृताः।
विश्रामानपि तत्सङ्ख्यान् गीते वाद्ये कलावशात्॥

गीते धातुषु सर्वत्र समार्धविषमादिषु।
प्रवेशांश्च विदारीणां कालसङ्ख्याः समात्रिकाः॥

५ वितालमनुतालांश्च भग्नतालक्रमानपि।
यथावदभिगम्यैतान्प्रयुञ्ज्यान्नाट्यकोविदः॥

पौरजानपदानाश्च देशे देशे महीभृताम्।
आचारश्चोपचारश्च व्यवहारा अलङ्क्रियाः॥

आकाराश्चैव वेषाश्च विहाराश्च पृथक्पृथक्।
१० तांस्तान्विशेषान् जानीयात्तत्तद्देशानुरूपतः॥

तां तां प्रकृतिमास्थाय नाट्येनाभिनयेन्नटः।
वैभाषिकाद्विभाषाश्च यथावत्परिकल्पयेत्॥

शकाराभीरचण्डालपुलिन्दाद्रशबरास्तथा[1]।
हालिका भैरवाश्चेति सप्त वैभाषिकाः स्मृताः॥

१५ विश्रामे गीतपाठ्यादेः[2] सदस्यानां नटादिभिः।
परिहासाय योक्तव्या देशभाषाभिरन्विताः॥

शकारा गिरिकुञ्जेषु शकारप्रायभाषिणः।
रक्ताक्षाः कृष्णकेशाश्च तुन्दिला दन्तुरास्तथा॥

कार्पासकर्पर[3]प्रायवसनाः सहयोषितः।
२० आभीराः काननस्रोतस्विनीतीरनिवा[4]सिनः॥

सगोकुला हास्यवेषाः सहपुत्रकलत्रिणः।
भाषां चषभषप्रायां व्याहरन्ति यतस्ततः॥

ग्रामोपान्तवने वासः क्रूरवेषा गवाशनाः।
ह्रस्वकालाङ्गतेजाश्च(?) श्वपचप्रायभाषिणः॥

---

1 C दय:। 2 A B मगीतपाठ्यानाम्। 3 A B खिकर्वर। 4 A B D काननस्रोतस्विनीतीरवासिनः। C आभारीः कान्तवेतस्विनी।

कदन्नभोजिनो वन्याश्चण्डाला इत्युदीरिताः ।
गिरिकाननवेश्मानः मधुमैरेयपायिनः ॥

बकुलप्रायवसनाः सस्त्रीका गीतसादराः ।
पुलिन्दाः स्युः सरमरप्राया भाषास्तुपाश्रिताः ॥

५ पर्वतप्रायवसनाः पल्लीपर्वतवासिनः ।
शार्दूलमृगयाक्रीडाः फलाहाराः फलप्रियाः ॥

शबराश्चमेरप्रायकेशा लेलेतिभाषिणः ।
शैलारण्यतटीवासाः श्यामाकाहारशीलिनः ॥

साजगोमहिषास्सर्वे कार्पासादितुषप्रियाः ।
१० हलहल्लेतिभाषन्तो हालिकाः सकुटुम्बिनः ॥

पुरे जनपदेऽरण्ये वसन्तः स्वैरचारिणः ।
मांसाशिनो मधुरता मतमांसबलिक्रियाः ॥

विदूरलोकयात्राश्च रुरुशार्दूलमेखलाः ।
अविस्पष्टपदालापा भैरवा इत्युदीरिताः ॥

१५ एते विशेषतः कार्या हासहेतोः सभासदाम् ।
नातीव संस्कृताख्या वा भाषा नातीव देशजा ॥

कथाप्रवर्तिनी गोष्ठ्यां भाषा स्यादुभयात्मिका ।
शब्दरूपा यत्र भावास्तिष्ठन्ति च दुहन्ति च ॥

अभीष्टमर्थिनां लोके सा गोष्ठीति निगद्यते ।
२० सभ्याः सभापतिसखाः श्रुतशीलकुलोन्नताः ॥

यत्रासते प्रीयमाणास्तां गोष्ठीं प्रविशेत्सुधीः ।
या गोष्ठी लोकविद्विष्टा या च स्वैरविसर्पिणी ॥

परहिंसात्मिका या च न तत्रावतरेद्बुधः ।
त्रिवर्गसाधनी या च या लोकैरपि सत्कृता ॥

तस्यां गोष्ठ्यां प्रकथयन्कथां बहुमतो भवेत् ।
यस्मात्सर्वान्न पश्यन्ति सर्वे गोष्ठ्यां सभासदः ॥

तस्मात्तां सर्वतो भावैः प्रीणयेन्नाट्यवित्तमः ।
इत्थमुक्तक्रमोपेतं नाट्यं सर्वरसाश्रयम् ॥

५ प्रेक्षकस्य प्रयोक्तुश्च कवेः स्याद्भुक्तिमुक्तिदम् ।
ग्रन्थेऽस्मिन्नविभिन्नोऽपि योऽर्थो बहुश ईरितः ॥

न तस्य पुनरुक्तत्वं मतान्तरसमर्थनात् ।
सन्ति चैकशतं शिष्या भरतस्य महामुनेः ॥

तेषां मतैरभिन्नोऽपि भिन्नवत्प्रतिभाति सः ।
१० न स्वातन्त्र्यान्न मौढ्याच्च कोऽप्यर्थो निहितः क्वचित्[1] ॥

भट्टाभिनवगुप्तार्यपादप्रोक्तेन वर्त्मना ।
अयं प्रबन्धः कथितः शारदायाः प्रसादतः ॥

यः कश्चिदवगन्ता चेत्प्रबन्धस्यास्य तत्त्वतः ।
स माननीयो भवति राजभिर्भावकोविदैः ॥

इति श्रीशारदातनयविरचिते भावप्रकाशने
नाट्यप्रयोगभेदप्रकारविशेषनिर्णयो
नाम दशमोऽधिकारः ।

---

सोऽव्यादादिनगो भुजङ्गललितत्रासाश्रिताख्यैर्जग-
त्सर्गध्वंसनपालनादिकरणैस्तत्तत्क्रियास्तानतैः (?) ।
यः कल्पान्तमहातमीयवनिकामध्यान्तरन्तर्हितः
स्वात्मन्येव जगद्विचित्रचरितं पश्यन्मुदा नृत्यति ॥

1 C ends here ।

# APPENDIX.

The full text and source of the passages cited as illustrations.

पृष्ठ. पंक्ति.

१४६ १७ गतः स काल इत्यादौ प्रश्नगर्भोऽभिधीयते ।—

गतः स कालो यत्रासीन्मुक्तानां जन्म वल्लिषु ।
वर्तन्ते सांप्रतं तासां हेतवश्शुक्तिसम्पुटाः ॥

शृ. प्र. ७. १६.

१४६ १८ युष्मच्छासनलङ्घनादौ ज्ञेयाऽभ्युपगमात्मिका ।—

युष्मच्छासनलङ्घनांभसि मया मग्नेन नाम स्थितं
प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि ।
क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवा–
नद्यैकं दिवसं ममासि न गुरुः नाहं विधेयस्तव ॥

वे. सं. १.

१४६ १९ मथ्नामि कौरवेत्यादावुपहासात्मिका भवेत् ।—

मथ्नामि कौरवशतं समरे न कोपा-
द्दुश्शासनस्य रुधिरं न पिबाम्युरस्तः ।
सञ्चूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन ॥

वे. सं. १.

१४६ २० लाक्षागृहानलेत्यादौ विवादाक्षेपकात्मिका ।—

लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्तु मयि जीवति धार्तराष्ट्राः ॥

वे. सं. १.

१४६ २१ वितर्कगर्भा काकुः स्याद्यथोन्मत्तपुरूरवाः ।—

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।

पृष्ठ. पंक्ति.

अयमपि पटुः धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी ॥

विक्र. ४.

१४७ ३ सहभृत्यगणेत्यादौ ज्ञेयो वाक्यान्यथात्मकः ।—

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।
स्वबलेन निहन्ति संयुगे न चिरात्पाण्डुसुतः सुयोधनम् ॥

वे. सं. २.

१४७ ४ वत्से ? त्वं जीवितेत्यादौ ज्ञेयो वाक्यासमाप्तिकः ।—

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किमतः परेण ॥

उ. रा. च. ३

१४७ ५ दिङ्मातङ्गघटेत्यादौ वाक्यसंभेदरूपकः ।—

दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा साऽपि वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत्कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥

भट्टप्रभाकरस्य. औचि—चर्चा.

१४७ ८ प्रत्यग्रारिक्तेत्यादौ वाक्यानुच्चारणात्मकः ।—

प्रत्यग्रारिक्तताभिमन्युनिधनप्रोद्भूततीव्रक्रुधः
पार्थस्याकृतशात्रवप्रतिकृतेरन्तःशुचा मुह्यतः ।
कीर्णा बाष्पकणैः पतन्ति धनुषि व्रीडाजडा दृष्टयो
हा वत्सेति गिरः स्फुरन्ति न पुनर्निर्यान्ति कण्ठाद्बहिः ॥

शा. प. निशानारायणस्य.

१४७ १६ एवं महेहमेतेति (?) वाक्यादावभिनीयते ।—

एद्दहमेत्तत्थणिया एद्दहमेत्तेहिं अच्छिवत्तेहिम् ।
एद्दहमेत्तावत्था एद्दहमेत्तेहिं दिअएहिम् ॥ (?)
[ एतावन्मात्रस्तनी एतावन्मात्राभ्यामक्षिपत्राभ्याम् ।
एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः ॥ ]

पृष्ठ. पंक्ति.

१४८ १३ शान्त्यै वोऽस्तु कपालेति वाक्यादावादिमो ध्वनिः ।—

शान्त्यै वोऽस्तु कपालदाम जगतां पत्युर्यदीयां लिपिं
क्वापि क्वापि गणाः पठन्ति पदशो नातिप्रसिद्धाक्षरम् ।
विश्वं स्रक्ष्यति वक्ष्यति क्षितिमपामीशिष्यतेऽशिष्यते
नागैरागिषु रंस्यतेऽत्स्यति जगन्निर्वेक्ष्यति द्यामिति ॥

सर. कण्ठा. प. ४५९

१४८ २१ भम धम्मिअ वीसत्थो इत्यादिर्वाऽनुनादभाक् ।—

भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिदो देण ।
गोदाणईकच्छकुडङ्गवासिणा दरिअसीहेण ॥
[ भ्रम धार्मिक विस्रब्धः स श्वा अद्य मारितस्तेन ।
गोदानदीकच्छकुडङ्कवासिना दृप्तसिंहेन ॥ ]

गा. स. २. ७५.

१४९ ३ लावण्यसिन्धुरित्यादि प्रतिशब्दनिदर्शनम् ।—

लावण्यसिन्धुरपरैव हि केयमत्र
यत्रोत्पलानि शशिना सह संप्लवन्ते ।
उन्मज्जति द्विरदकुम्भतटी च यत्र
यत्रापरे कदलिकाण्डमृणालदण्डाः ॥

वामनकाव्या. ४. ३. ४.

१४९ ७ भक्तिप्रह्वयदेत्या(ह्वाय दात्वा)दावनुनादः प्रतीयते ।—

भक्तिप्रह्वाय दातुं मुकुलपुटकुटीकोटरक्रोडलीनां
लक्ष्मीमाक्रष्टुकामा इव कमलवनोद्घाटनं कुर्वते ये ।
कालाकारांधकाराननपतितजगत्साध्वसध्वंसकल्याः
कल्याणं वः क्रियासुः किसलयरुचयस्ते करा भास्करस्य ॥

सूर्यशतक—२.

१४९ १२ दत्तानन्देतिवाक्यादौ प्रतिनादध्वनिर्यथा ।—

दत्तानन्दाः प्रजानां समुचितसमयाकृष्टसृष्टैः पयोभिः
पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः ।
दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो
गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु ॥

सूर्यशतक—९.

पृष्ठ. पंक्ति.

१७१ ९ तथाभूतादिवाक्यादौ स्वरकाकुः प्रकाश्यते ।—

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्कं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥

वे. सं. १.

२०३ ५ उद्दामोत्कलिकेत्यादि लतारत्नावलीगतम् ।—

उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन्कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥

रत्ना. २.

२०४ १२ बीजश्च वेणीसंहारे सत्पक्षा इति दर्शितम् ।—

सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारंभाः ।
निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥

वे. सं. १.

२०५ १२ विष्कम्भे माल्यवद्वाक्ये हा वत्सा इत्युदीरिते ।—

हा वत्साः खरदूषणप्रभृतयो वध्याः स्थ पापस्य मे
हा हा वत्स विभीषण त्वमपि मे कार्येण हेयः स्थितः ।
हा मद्वत्सल वत्स रावण महत्पश्यामि ते सङ्कटं
वत्से केकसि हा हताऽसि न चिरान्नीन् पुत्रकान् द्रक्ष्यसि ॥

वीरच. ४.

२०६ १८ आरम्भोऽसंशयं क्षत्रेत्यादि दुष्यन्तभाषिते ।—

असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥

अ-शा. १.

२०६ २० प्राणैस्तपोभिरित्यादि यत्तत्कामन्दकीवचः ।—

यन्मां विधेयविषये स भवानियुङ्क्ते
स्नेहस्य तत्फलमसौ प्रणयस्य सारः ।
प्राणैस्तपोभिरथवाऽभिमतं मदीयैः
कृत्यं घटेत सुहृदो यदि तत्कृतं स्यात् ॥

मा. मा. १.

पृष्ठ. पंक्ति.

२०६ २१ प्रीते विधातरीत्यादि प्राप्त्याशा माल्यवद्वचः।–

प्रीते विधातरि पुरा परिभूय मर्त्या-
न्वत्रेऽन्यतो यदभयं स भवानदंयुः।
तन्मर्मणि स्पृशति मामतिमात्रमद्य
हा वत्स शान्तमथवा दशकन्धरोऽसि॥

अनर्घ. रा. ४.

२०६ २२ भव हृदय साभिलाषं संप्रति सन्देहनिर्णयो जातः।
आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम्॥

अ. शा. १.

२०७ १९ अंहो अअं सो राओत्ति रत्नावल्यां मुखं स्मृतम्।–
अंहो अअं सो राआ उदअणो णाम जस्स अहं तादेण दिण्णा। (दीर्घं निश्वस्य)
ता परप्पेसणदूसिदं वि मे सरीरं दाणिं बहुमदं संवुत्तम्।

रत्ना. १.

२१० १५ शरीरं क्षाममित्यादि क सेत्यन्तं यदन्तरा।–

शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे
भवेत्सास्रं चक्षुः क्षणमपि न सा दृश्यत इति।
तया सारङ्गाक्ष्या त्वमसि न कदाचिद्विरहितं
प्रसक्ते निर्वाणे हृदय परितापं व्रजसि किम्।

मालविका. ३.

२११ १४ यथा हि वेणीसंहारे तीर्णे भीष्ममहार्णवे।–
तीर्णे भीष्ममहार्णवे कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम्।
भीमेन प्रियसाहसेन रभसादल्पावशिष्टे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः॥

वे–सं ६.

२१७ २० एकैकानि शिरांसीति पद्यादौ सा च दृश्यते।–
एकैकानि शिरांसि राक्षसचमूचक्रस्य हुत्वा निजे
तेजोऽग्नौ दशकण्ठमूर्धभिरथो निर्माय पूर्णाहुतिम्।
अद्य स्वस्त्ययनं समाप्य जगतो लङ्केन्द्रबन्दीकृतां
सीतामप्यवलोक्य शोकरभसव्रीडाजडो राघवः॥

अन. रा. ७.

पृष्ठ पंक्ति.

२२८ ९ प्रीतिर्नाम सदस्यानामित्यादेर्वस्तु सूच्यते।—

प्रीतिर्नाम सदस्यानां प्रिया रङ्गोपजीविनः।
जित्वा तदपहर्तारमेष प्रत्याहरामि ताम्॥

अन. रा. १.

२२८ १ बीजन्तु वेणीसंहारे सत्पक्षा इति दर्शितम्॥—See page ३१८

२२८ ११ रत्नावल्यां मुखं द्वीपादन्यस्मादपि दर्शितम्।—

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः॥

रत्ना. १.

२२८ १२ तवास्मि गीतरागेति पात्रं शाकुन्तले कृतम्।

तवास्मि गीतरागेण हारिणा प्रसभं हृतः।
एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा॥

अ. शा. १.

२२८ २१ प्ररोचना सा श्रीहर्षो निपुणेत्यादिनोच्यते।—

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम्।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुनः
मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः॥

रत्ना. १.

२२९ १ मद्गर्या रसपाठेति पद्ये प्रस्तावनोच्यते।—

मद्गर्या रसपाठगीतिगतिषु प्रत्येकमुत्कर्षिणो
मौद्गल्यस्य कवेर्गभीरमधुरोद्गारा गिरां व्यूतयः।
वीरोदात्तगुणोत्तरो रघुपतिः काव्यार्थबीजं मुनि-
र्वाल्मीकिः फलति स्म यस्य चरितस्तोत्राय दिव्या गिरः॥

अन. रा. १.

२२९ १७ अर्थः क्रूरग्रहेत्यादिः मुद्राराक्षसकल्पितः।—

क्रूरग्रहः सकेतुश्चन्द्रमसं पूर्णमण्डलमिदानीम्।
अभिभवितुमिच्छति बलाद्रक्षत्येनन्तु बुधयोगः॥

मु. रा. १.

पृष्ठ. पंक्ति.

२३० १५ अथ विक्रमोर्वशीये राज्ञो विदूषकस्य सल्लापे ।—

विदूषकः—भो वअस्स को एसो कामो जेण तुमं पि दूमिज्जसे । सो किं पुरिसो आदु इत्थिअत्ति ।

राजा—सखे

मनोजातिरनाधीना सुखेष्वेव प्रवर्तते ।
स्नेहस्य ललितो मार्गः काम इत्यभिधीयते ॥

विदूषकः—एव्वं पि ण जाणे ।
राजा—वयस्य इच्छाप्रभवः सः ।
विदूषकः—किं जो जं इच्छदि सो तं कामेदित्ति ।
राजा—अथ किम् ।

विक्रं. १ see दशरूपक. ३.

२३० २० कार्या सैकतलीनेति (?) प्रस्तुतार्थोपदेशतः ।—

अ. शा. ६. (?)

२३२ ५ सकुण्डलं सकवचमित्यादौ सा विलोक्यते ।—(?)

२३३ १२ कस्मैचित्कपटायेति लक्ष्मीमुद्दिश्य केनचित् ।—

कस्मैचित्कपटाय कैटभरिपुरःपीठदीर्घालयां
देवि त्वामभिवाद्य कुप्यसि न चेत्तत्किंचिदाचक्ष्महे ।
यत्ते मन्दिरमम्बुजन्म किमिदं विद्यागृहं यच्च ते
नीचान्नीचतरोपसर्पणमपामेतत्किमाचार्यकम् ॥

अन. रा. ७. ४३.

२३३ १४ मेदश्छेदकृशेत्यादिमृगयागुणकीर्तनैः ।—

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।
उत्कर्षः स च धन्विनां यदिषवः सिद्ध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥

अ. शा. २.

१ These passages are not found in any edition of the text.

पृष्ठ पंक्ति.

२७८ १३ उत्कण्ठा माधवस्यापि तत्पश्येयमितीर्यते ।—

सम्भूयेव सुखानि चेतसि परं भूमानमातन्वते
यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः ।
यद्बालेन्दुकलोच्चयादवचितैः सारैरिवोत्पादितं
तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम् ॥
मा. मा. ५.

२७८ १४ अवहित्थं तदेव स्याद्यत्पाणिर्न निवारितः ।—

यत्पाणिर्न निवारितो निवसनग्रन्थिं समुद्ग्रन्थयन्
भ्रूभेदो न कृतो मनागपि मुहुर्यत्खण्ड्यमानेऽधरे ।
यन्निःशङ्कमिहार्पितं वपुरहो पत्युः समालिङ्गने
मानिन्या कथितोऽनुकूलविधिना तेनैव मन्युर्महान् ॥
हेम. का. प. ३०४.

२७८ १८ यथा कुलेन कान्त्या च वयसेत्यादि कथ्यते ।– (?)

२७८ १९ वितर्कः कास्विदित्यादि दुष्यन्तवचनं यथा ।—

कास्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥
अ. शा. ५.

२७८ २० किमेषा कौमुदी किं वा लावण्यसरसी सखे ।—
इत्यादि रामाराधायां संशयः कृष्णभाषिते ॥ (?)

२७९ १ तं विना कैकयीपुत्रमिति रामेण भाषितम् । (?)

२७९ २ उद्वेगो हा हतोऽस्मीति कपिञ्जलवचो यथा ॥—

हा हतोऽस्मि हा दग्धोऽस्मि हा वञ्चितोऽस्मि हा किमिदमापतितम् ।
इत्येतानि चान्यानि च विलपन्तं कपिञ्जलमश्रौषम् ॥
काद. पू.

२७९ ३ मौढ्यं त्वगियमित्यादि यदजेनापि भाषितम् ।—

पृष्ठ. पंक्ति.

स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥
रघु. ८.४६.

२७९ ४ अङ्गानि चन्दनाम्भोभिः सिञ्चेत्यादि वचो यथा । (?)

२७९ ६ तद्दृश्यते परीवारप्रार्थनाभिः क्रियास्विति ॥—

परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः कथमपि परिवारप्रार्थनाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीमभिनवकरिदन्तच्छेदकान्तःकपोलः॥
मा. मा. १.

२७९ ८ अकामोपनतेनैव साधोरित्यादिनोच्यते । (?)

२७९ ९ यथा वामेन वानीरमित्याद्यनुगतिः स्मृता । (?)

२७९ १० यथैव कुलपत्यङ्के दोर्दण्डाः केति विस्मयः ।

दोर्दण्डाः क धृताङ्गदाः क नु शिरानद्धौ भुजौ द्वाविमौ
वक्त्राणि क नु कान्तिमन्ति वलिमत्केदं ममैकं मुखम् ।
वाचस्ताः क जितार्णवध्वनिघनाः कायं वचःसंयमो
हेलाकम्पितभूधरः क चरणन्यासः क मन्दा गतिः ॥
सर. कण्ठा. पं. २६४.

२७९ ११ प्राणैस्तपोभिरित्यादि यद्वचः साधनं भवेत् ।
see p. ३१८.

२७९ १३ प्रीतिर्नाम सदस्यानामित्यादिवचनं यथा ।
see p. ३२०

२७९ १५ यस्स आतङ्क इत्युक्तो राहोश्चन्द्रकलादिवत् ।—

राहोश्चन्द्रकलामिवाननचरीं दैवात्समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम् ।
आतङ्काद्विकलं द्रुतं करुणया विक्षोभितं विस्मया–
त्क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्तताम् ॥
मा. मा. ५.

२७९ १६ यथा सीताऽपि तत्रासेत्यादावपि च दृश्यते ॥ (?)

२७९ १८ माधवस्य परिच्छेदातीत इत्यत्र दृश्यते ।—

पृष्ठ. पंक्ति.

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च तनुते ॥

मा. मा. १

२७९ २० विजित्य पृथिवीं सर्वामित्यादौ तद्विलोक्यते । (?)

२७९ २२ तद्रामोऽहं यदीत्यादि महानाटककल्पितम् ।—

रामोयं भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम् ।
वन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥

महा ६. ४० (?)

२८० २ यथाऽर्घ्यमर्घ्यमित्यादौ जामदग्न्यव्यतिक्रमः ।—

अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनवेक्ष्य भरताग्रजो यतः ।
क्षत्रकोपदहनार्चिषं ततः सन्दधे दृशमुदग्रतारकाम् ॥

रघु. ११. ६९.

२८० ७ तं दृष्ट्वा शत्रुहन्तारमित्यादौ स तु दृश्यते । (?)

२८० ९ प्रियप्रायेतिवाक्यादौ मदः स्त्रैण उदाहृतः । (?)

२८० ११ स त्वान्त्रैः कल्पितेत्यादिमालतीमाधवादिवाक् ।

आन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
व्यक्तोत्तंसभृतः पिनह्य सहसा हृत्पुण्डरीकस्रजः ।
एताः शोणितपङ्ककुङ्कुमजुषः संभूय कान्तैः पिब-
न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥

मा. मा. ५.

२८० १३ तुल्यशीलवयोजातामित्यादौ तद्विलोक्यते । (?)

२८० १५ नेदं मुखमितीत्यादौ दृश्यते सा प्ररोचना । (?)

पृष्ठ. पंक्ति.

२८० १७ उत्पत्तिर्देवयजनादित्यादौ सा विलोक्यते ।—

उत्पत्तिर्देवयजनाद्ब्रह्मवादी नृपः पिता ।
सुप्रसन्नोज्ज्वला मूर्तिरस्याः स्नेहं करोति मे ॥

वीर. च. १.

२८० १९ राज्याद्भ्रंशो वने वासेत्यादौ विन्यास उच्यते ॥ (?)

२८० २१ एष कञ्चुकिना तावत्तिष्ठतीत्यादिनोच्यते । (?)

२८१ १ सन्देहनिर्णयो जात इत्यादौ सा विलोक्यते ।-

see. p. ३१९

२८१ ३ सा व्याहृता प्रतिवचो न सन्दध इतीर्यते ।—

व्याहृता प्रतिवर. न सन्दधे गन्तुमैच्छदवलंबितांशुका ।
सेवते स्म शयनं पराङ्मुखी सा तथाऽपि रतये पिनाकिनः ॥

कु. सं. ८. २.

२८१ ५ नीलमेघाश्रिता विद्युदित्यादौ सा विलोक्यताम् । (?)

२८१ ७ देवताभ्यो वरं प्राप्तेत्यादौ संहार इष्यते । (?)

२८१ ९ धन्या केयं स्थितेत्यादौ दृश्यते तत्समर्पणम् ।—

धन्या केयं स्थिता ते शिरसि शशिकला किन्नु नामैतदस्याः
नामैवास्याः तदेतत्परिचितमपि ते विस्मृतं कस्य हेतोः ।
नारीं पृच्छामि नेन्दुं कथयतु विजया न प्रमाणं यदीन्दु-
र्देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः ॥

मु. रा. १. १.

३०६ ९ प्रयच्छतोच्चैः कुसुमानीति भारविदर्शिता ।—

प्रयच्छतोच्चैः कुसुमानि मानिनी विपक्षगोत्रं दयितेन लम्भिता ।
न किञ्चिदूचे चरणेन केवलं लिलेख बाष्पाकुललोचना भुवम् ॥

किरात. ८. १४.

३०६ ११ गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं
श्वसितमधिकं किन्न्वेतत्स्यात्किमन्यदितोऽथवा ।
भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥

मा. मा. १

पृष्ठ. पंक्ति.

३०६ १२ पाणिपीडनविधेरनन्तरं शैलराजतनया हरं प्रति ।
भावसाध्वसपरिग्रहादभूत्कामदोहदमनोहरं वपुः ॥
कुमा. ८. १.

३०६ १४ गगनं गगनाकारं सागरः सागरोपमः ।
रामरावणयोर्युद्धं रामरावणयोरिव ॥
वा–रामायण. युद्ध–५१६–२४.

३०६ १५ अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥
अ.–शा. १.

३०६ २० तन्वी श्यामा शिखरदशना पक्वबिम्बाधरोष्ठी
मध्येक्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः ।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः ॥
मे. दू. २. १५.

३०७ १ यान्त्या मुहुर्वलितकन्धरमाननन्तदावृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या गाढं निखात इव मे हृदये कटाक्षः ॥
मा. मा. १.

# INDEX. 1

Index of works and authors cited in this work.

# INDEX. II

Index of Important words.

### आ

P. L.



P. L.

P. L.



P. L.

# INDEX. III

## Index of Verses.

ई

## प

# APPENDIX. II.

## मातृकान्तरलब्धाः पाठभेदाः[1]।

पृष्ठ. पङ्क्ति.

४ ६ श्चानुवृत्तिभिः
,, १० स्वीयस्वीय
,, ११ ह्रिरीरिताः
८ २ अधिष्ठितं यदर्केण मनस्सर्वैकसाक्षिणा
,, ३ तत्संस्कार
,, १६ द्रामिडी
१४ ९ स्तंभोव्याधिमद
,, १४ भयग्लानिसुखदुःखादिभिः
(एतन्मातृकायां प्रतिज्ञावाक्यानुसारेणैव स्तंभादीनां लक्षणमस्ति।)
१५ ३ वेपथुर्भीगद
,, ५ प्रहाराद्यैश्च जायते
,, ८ निर्वेदोऽथ तथा ग्लानिः
,, ११ गर्वोऽमर्षो विप्रियश्च मतिर्निद्रात्वपस्मृतिः
,, २० योगिष्वनुपादेयभाग्भवेत्
,, २१, २२ अर्धयोः स्थाने ' ग्लानिर्विरेकवमनक्षुत्पिपासादिभिर्भवेत् " इत्यस्ति
,, २४ कार्श्याङ्गश्लथनादिभिः
१६ १ कथ्यन्ते ह्येवमादयः
,, ३ स्त्रीनीचप्रकृतिं गता
,, ४ पुनर्द्विधा मता
,, ५ स्वरभेदश्च वैवर्ण्यं
,, ७ आकारसंवृतिश्चेति
,, ८ आत्मोत्था तु च विज्ञेया
,, १६ दृशोर्मिथ्यापरिवर्तित
,, १८ मद्योपभोगा......चाभिजन्मतः
,, २०, २१ अनयोरर्धयोः स्थाने 'तरुणो मध्यमः श्रेष्ठः इति मद्योद्भवास्त्रिधा, इत्येकमर्धं दृश्यते

पृष्ठ. पङ्क्ति.

१६, २२ तस्य च प्रकृतिस्त्रिधा
,, २३ अन्यदारभते वाच्यमन्यं वाचा ब्रवीति च
,, २४ वीक्षते कंचिदन्यं च
१७ ५ क्षेपश्रुत्यालंबनवीक्षणम्
,, ८ एवमादिविशिष्टाभिर्लक्षयेन्मध्यमं मदम्
,, १० पर्दते मेहते निष्ठीवति
,, ११ जर्जरभाषणः
,, १२ रपकृष्टे मदे
,, १७ संपत्तिमानेनोत्तमभाषिणाम्
१८ १० नेत्रविघूर्णनैः
,, ११ एते श्रमस्यानुभावाः कथ्यन्ते पूर्वसूरिभिः
,, १६ वर्ण्यं तदितरेषु तु
,, २१, २२ (अनयोः स्थाने ' चिंताकृच्छ्वास-निःश्वासैरधोमुखविचिन्तनैः" इत्येकमर्धं दृश्यते)
१९ १ कार्श्याकाशविलोकनैः
,, ३ करणं ज्ञानगुर्वाज्ञादेर्व्यतिक्रमात्
,, ९ वैरस्मृतेर्गदात्
,, १३ प्रमोहत्वं निःश्वासो
,, १८ चिन्तनान्मुहु
,, २० तादृशस्याव
२० १ वतोनानार्थावाप्तेश्च धृतिर्भवेत्
,, ३ मलाभेन हि शोचनम्
,, ५ मनादैवगुरु
,, ८ रोमांचाधिगतस्वेदैः

---

1 These readings are supplied by H. H. Yadugiri Yatirāja Swāmi from his Manuscript.

| पृष्ठ. | पङ्क्ति. | |
|---|---|---|
| २० | ११ | द्वेषणागतम् |
| ,, | १२ | बन्धनं वहु |
| ,, | १३ | पारुष्यभयमानादि |
| ,, | १५ | व्यसनादहितादपि |
| ,, | १८ | वर्णनीयोपि वै |
| २१ | १ | आविद्धधावनैर्बाहुस्वस्तिकोत्कुटिका |
| ,, | ८ | नेन वर्ण्यः स्यात् |
| ,, | ९ | विलापसंभ्रमाघातपरि |
| ,, | ११ | शस्त्रास्त्रग्रह |
| ,, | १८ | पारवश्यं तैर्जाड्यं च निरूपयेत् |
| ,, | २० | भिलाषाद्गात्रगौरवात् |
| ,, | २१ | निश्वसनादिभिः |
| २२ | ३ | चिन्तादिर्ज्येष्ठजो |
| ,, | ४ | विप्रश्शय्या |
| ,, | ६ | रूपासनादिभिः |
| ,, | १० | अकारणाङ्गविक्षेपात् |
| ,, | १५ | व्रीला |
| ,, | २२ | अनशनाद्दुःख |
| २३ | २ | निःश्वासोच्छ्वास |
| ,, | ११ | भुजाक्षेपाङ्गुलिस्फोटजृंभणाक्षिविमर्दनैः |
| ,, | १४ | स्वच्छैरुच्छ्वासनिश्वासैः ( प्रतिज्ञावाक्यानुसारेण अपस्मृतिः सुप्तिः प्रबोध इति क्रमोऽस्ति ) |
| ,, | १८ | व्याधिस्तु देशकालादि |
| ,, | १९ | व्याधिर्ज्वरो हि द्वेधा......विभेदतः |
| ,, | २० | शीतः कम्पाङ्गशोषास्यकूजनैः |
| २४ | ७ | आयुराज्ञाय |
| ,, | ८ | शनिवातादि |
| ,, | १० | अव्यक्तवर्णवचन |
| ,, | १२ | स्तु कथिता बहुधा व्यभि |
| ,, | १३ | विवेष्टनभ्रमारावविलापश्लथनादिभिः |
| ,, | १५ | धरध्वनेः |
| ,, | २१ | शय्योत्थोपवेशस्थितिरोदनैः |
| २५ | ३ | अश्रुमोक्ष...दिभिर्भवेत् |
| २९ | १ | वैलक्ष्यं |
| ३३ | ९ | ग्लानिर्जडात्मता |
| ,, | २१ | प्रबोधश्चापि |
| ३४ | ८ | भावाश्च वीभत्से |
| ३७ | ८ | न पदार्थान्तरं तथा |
| ,, | १२ | षट् प्रदीर्यंते |
| ५७ | २ | भरतैर्विहार |
| ,, | १० | इत्यूचुश्शङ्कुकादयः |
| ,, | १२ | भूषितस्स त्रिलोचनः |
| ,, | १५ | तस्माद्धासस्समुत्पन्नः |
| ,, | १८ | कोटिश्शत |
| ९८ | १० | स्तमवेक्ष्योद्भ्रांत |
| ,, | १२ | भयानको जज्ञे |
| ,, | १५ | अनेनैव प्रकारेण |
| ,, | १७ | यथाहितक्रमो वेम |
| ,, | १८ | यदात्मना |
| १४५ | ४ | काव्यादिबन्धस्य |
| ,, | ५ | वाक्यार्थत्वं तु |
| ,, | १६ | अभिधेयप्रतीतिर्या |
| ,, | १७ | धेयाविनाभावप्र |
| १४६ | ४ | संदर्भैः |
| ,, | ११ | षट्प्रकारैश्च |
| ,, | १२ | काकुविच्छेदिनानाप्रकरणादिना |
| ,, | १५ | भ्युपगमापह्नासाक्षेप |
| ,, | १७ | प्रश्नगत्याभि |
| ,, | २१ | यथोद्धतपुरू |
| १४७ | ३ | सह मित्रगणे |
| ,, | ४ | पद्ये त्वं जीविते |
| ,, | ५ | परवाग्भेदरूपकः |
| ,, | ६ | एवेत्यादो.....संभेदो विशेषत रोमांचेन वक्तुर्गुणविशेषम् |
| ,, | ९ | वाक्यानुच्चारणे तथा अकृतप्रतिक्रियस्य |
| ,, | ११ | व्यङ्ग्यप्रकरणा |

पृष्ठ. पङ्क्ति.

१४७ १५ एवमेवेदमंदेकैः त्रिः ?
,, १८ तात्पर्यं त्रिविधं तत् स्यात्
१४८ ५ कथितश्शाब्दो द्विविधो
,, ९ ध्वनिवेदिभिः
,, १२ तत्र तत्र ध्वनन् ध्वनिः
,, १७ दैवादिसंहातिः
,, १८ नित्यात्मैकत्व
,, १९ तत्रानुस्यूतमेवं तु ध्वनत् व्यक्त्यावसीयते
,, २१ वीसत्यं-नुनादवाक्
,, २२ विहितः पुरः
१४९ २ संकेतभूतः
,, ४ ध्वनन्नपि
,, ५ नावयवरूपातिशयबोधकम्
,, ७ भक्तिप्रह्वायदेत्येवमनुनादः
,, ८ करशब्दजात्
,, १० प्रजनयन् रवेः पुरुष
,, ११ ध्वनयन्ननुनादोत्र
,, १३ सामर्थ्योदत्र गोगिरः
,, १९ ध्वनयत्यस्या
,, २० सा यत्र स्वार्थविश्रान्तं
,, २२ ध्वनितात्पर्ययोः केचित् भेदो नास्तीति मन्वते
१५० ४ तात्पर्यानतुलाधृतम्
,, ६ तदवान्तरभेदाद्धि
,, ७ तात्पर्यमत्र वचांसि
,, ११ त्वतः स्मृतः
,, १८ वाक्यस्था
,, २१ यदि वाक्ये पदार्थे च प्रकृतिप्रत्यये तथा
१५१ २ प्रत्ययानां पदार्थानां
,, ४ चाभिरूप्यं
,, ७ वाक्ये पदे पदार्थानां
,, ११ भाव उच्यते
,, १५ निबंधो
,, १७ बंद्धः
,, १९ मध्ये बद्धश्चेत्
१५२ ११ ते च षोडश
१५२ १३ गौरवत्वाद्यथार्थता
,, १५ रसाश्रयोपि गायंति
,, १७ सदाशिवेनैव
,, २० प्रतीतिव्रीडेर्ष्या
१५३ ३ रसात्मकत्वस्य
,, ११ तद्रसो भवेत्
,, १३ अतोस्ति
,, १८ अत्र चाविद्यमानत्वात्
,, १९ अत्राविवक्षितार्थत्वाद्विशेषांत्तत्परत्वतः
१५४ २ प्रत्यक्षानिव
,, ६ तद्भोगाद्यनु
,, ७ स्वादु तत्रो
,, ११ सामाजिकौ यथा
,, १९ दर्शितम्
,, २० अथ शब्दार्थसंबन्धे निर्णीतिद्वारपूर्विका । स्वस्वशास्त्रार्थसंम्बन्धनिर्णीतिरिह चोच्यते
१५५ ५ षोढा सोर्थो विभिद्यते
,, ७ एभ्यो विभिन्न एतेभ्यः
,, ८ संज्ञिकः
,, १० यद्वस्तुवाच्य
,, १३ सह प्रतीते वस्त्वन्यशब्दो
,, १५ या विनाभावप्रतीते
,, १६ हेतुतो
,, १८ तिशयव्यञ्जनात्
१५६ १ विशिष्टवाच्यलक्ष्यार्थे
,, ३ तयाश्रितः
,, ४ गम्योर्थो गम्य ईरितः
,, ५ विशिष्टवाच्यलक्ष्येर्थे
,, ६ यापदार्थे विविन्नोति ? व्याप्तिर्गति
१५६ १५ वस्तु यत्
,, १६ प्रत्यायकस्तमेवार्थं
१५७ २ अत्र ते व्यभि
,, ५ कालः प्रकल्प्यते
,, ८ तत्र साफल्यवैफल्य
,, १३ धर्मादयोऽत्र
,, १८ तासु धर्मतयोच्यते

पृष्ठ. पङ्क्ति.

१५७ २० द्रव्ये धर्म उदीर्यते
,, २२ व्यक्ताव्यक्तादि सुगुणो यत्र धर्म उदीर्यते
१५८ १ गुणः कल्पिते गुणे
,, २ इदमर्धं १० इति स्थाने १० 'ये धर्मा' इत्येतदत्रच स्थानेऽस्ति
,, ६ समवायिभाक्
,, ७ गुणादिव्यक्तघटना
,, १९ क्रियया च कदाचन
,, १९ वाच्यत्वमेव च
,, २० एवं विनिमयं कृत्वा
१५९ २ वाच्यार्थगोचराः
,, ४ यत्प्रमोदाय
,, ७ पदार्थस्याभि
,, ८ शब्देन गम्यते
,, ९ मुपकार्येर्ये पदार्थो ह्युपकारकः
,, १७ पदार्था एव वाक्यार्थाः
,, २० योग्यैः सहितैः
१६० १ कस्योपकुर्मह इति
,, २ यत्परं नेह पदार्थः तत्परः
,, ४ कल्पना
,, १० प्रकाशितम्
,, २१ जातिरेवेति
,, २२ गौरित्यस्यैव
१६१ १ क्रियादिका
,, ९ क्वचित्कदाचित्
,, १४ त्युपाधिस्स तु द्विधा
,, १८ रिति स्मृतः
,, २२ दिष्वर्थेनैव निवेशितः
१६२ ९ मतकल्पितम्
,, ११ अभिन्नेपि च शुक्लादौ
,, १६ डित्यादित्वं तदर्थेषु
,, १८ निमित्तं तु न व्यक्ति
,, २२ धा स्मृता
१६३ १ भवेच्छब्दस्य मुख्येर्थे वृत्तिर्व्यक्तिष्ववस्यति

पृष्ठ. पङ्क्ति.

१६३ ६ लक्षयत्येष शब्दः
,, ८ बाधे तद्योगे
,, ११ धर्मत्वादिप्रयोजनात्
,, १४ लक्षणा सेयं
,, १५ दन्या लक्षितलक्षणा
,, १६ सोपादानाख्य
,, २० स्वक्रियारोप्यते यस्मिन्नुक्ता सारोपिता क्रिया
१६४ १२ ( इदमर्धं नास्ति )
,, १३ देवदत्तादिपीनत्वे तत्त्वस्यानुपपत्तितः
,, १४ दिवारात्रौ प्रकल्पने
,, १५ रेव च
,, १८ यतः स्वतः
,, १९ लक्षणैषा
,, २० यत्र भेदौ परस्परम्। सिद्धभेदौ इति च
१६५ २ सानाख्या
,, ६ गौरयमित्यत्रो
,, ७ गुणाः स्वतः
,, १३ बाहीकार्थापरार्थाभि
,, १७ क्रोशन्ति
,, २२ तद्भेदाव
१६६ ४ यथेन्द्रार्था इमाः स्थूणा इत्यादौ
,, ६ "राजकीय" इत्यर्धानन्तरं 'हस्त' इत्यस्मात् पूर्वे इदमर्धमस्ति यथा 'सा च सावयवद्वारा लक्षणा क्वापि दृश्यते' इति
,, ८ सावयवभावनिबंधा लक्षणापि कथितैव सुधीभिः
,, ९ अतक्षा तक्ष
,, १० समुत्पन्ना
,, १४ वक्रे क्वचित्
,, १७ साध्यवसानाख्या सारोपाख्या च या
,, २१ न दृश्यते
१६७ १ हेतुर्यत्तद्वर्तं च
,, २ विना क्वापि न च व्यङ्ग्यर्थं व्यज्यते न क्वचित् स्फुटम्

| पृष्ठ. | पङ्क्ति. | |
|---|---|---|
| १६७ | ९ | स्फुटं यत्र |
| ,, | ९ | भाविकात्मनि पद्ये तु |
| ,, | २२ | ब्दस्य तु क्वचित् |
| १६८ | ११ | पावनत्वादिरुच्यते |
| ,, | १२ | लक्षणीयेन संबन्धो |
| ,, | १७ | लक्षणैका स्या |
| ,, | १९ | न दृश्यते |
| १६९ | ५ | शब्दवाच्या भवन्ति ते |
| ,, | ७ | प्रचक्ष्महे |
| ,, | ८ | बहुधावाभिधा |
| ,, | २२ | त्पूज्यते शिवः |
| १७० | ७ | राजधानी त्रिभाव्यते |
| ,, | ९ | रित्युक्ते |
| ,, | १४ | मुख्यार्थबाधाभावात्तु |
| ,, | १९ | त्प्रयोजनं |
| ,, | १६ | गुम्भवेत् |
| ,, | १७ | व्यञ्जकस्तत्र |
| १७१ | १ | वाच्यादयः स्मृता |
| ,, | १९ | णोल्लेइ अणोल्लमणा |
| ,, | २३ | किं ति चिट्ठसि |
| १७२ | १ | संभोगनिषेधो |
| ,, | ३ | करेणावृणुते स्तनौ |
| ,, | ४ | निमीलनाख्येङ्गितेन |
| ,, | १० | शब्देनैव हि वेद्योऽयं |
| ,, | १४ | देयता स्थिता |
| ,, | २२ | यथा त्वामस्मि |
| १७३ | ३ | ममैवोपकृतं–प्रथितश्च यत् |
| ,, | १४ | भावशान्त्यादयोङ्गत्वम् |
| ,, | २० | व्यंग्ये सर्वत्र दृश्यते ( अस्मादनन्तरं "यस्त्वलक्ष्यक्रमव्यंग्योलक्ष्यव्यंग्यक्रमश्च यः। व्यंग्ये तथा गुणीभूतव्यंग्येंगाङ्गित्वमेष्यतः" इत्यधिकमस्ति ) |
| १७४ | २ | शब्दस्तस्य |
| ,, | ९ | तत्काव्यमवरं मतम् |
| ,, | ११ | त्रिधा स कथितो ध्वनिः |
| १७४ | १३ | शब्दार्थशक्तिमूला |

| पृष्ठ. | पङ्क्ति. | |
|---|---|---|
| १७५ | ४ | कथितस्तात्पर्यार्थेषु केषुचित् |
| ,, | ६ | विशेषरूपस्तात्पर्यमिति ते मन्वते परे |
| ,, | ७ | पदार्था ये पदार्थानामन्वि |
| ,, | ९ | स्यैव हि शब्द |
| ,, | १२ | शब्दे शक्तिमभिज्ञाय व्यङ्ग्यार्थस्य |
| १७६ | १९ | समूहो यः पदानां तद्वाक्यमित्यथ |
| १७७ | १ | वापि कदाचन |
| ,, | ९ | वक्त्रधीनतया न हि |
| ,, | १६ | येर्थादिवादिनश्शब्दा |
| १७८ | १३ | प्रतीतेः स्या |
| ,, | १५ | अर्थसंस्पर्शितैव स्यात्–निश्चयात् |
| १७९ | १ | निरूप्यते |
| १८४ | ११ | यथेप्सितम् ( इत्यस्मादनन्तरं "तत्रैकैकत्र शाखायां शतं तस्मिन् निबोधयेत्" इत्यर्धमधिकमस्ति ) |
| १८५ | ११ | नाड्यो द्वाविंशतिविधा |
| ,, | १३ | त्रुटिता मलिनास्ताः स्युः |
| ,, | १४ | कपोलफलकादिषु |
| ,, | १६ | स्वरसंज्ञां भजंति ताः (अस्मादनन्तरं "रमयन्ति स्वमात्मानं इति ज्ञेयाः स्वरा बुधैः" इत्यधिकमस्ति ) |
| ,, | १८ | स्तालुदर्शनादष्टदर्शने |
| ,, | १९ | धैवतं स्मृतम् |
| ,, | २१ | पंचभिर्दीर्यते |
| १९५ | ९ | चारी महाचारी |
| १९६ | १ | अथावतरणं |
| ,, | ३ | आरंभो मुखबीजानां–कार्यमित्यपि |
| ,, | ९ | वक्त्रपाणि–मता संघोटना |
| ,, | १० | संघोटना |
| १९७ | १५ | कथोद्घात इति स्मृतः |
| १९८ | ५ | त्रिवृत्तं स्यात् त्रिसामकं |
| ,, | २२ | तत्र त्रिसाम्ना |
| १९९ | ३ | पुष्पांजलिं मुहुर्मुक्त्वा–परित्यजेत् |

पृष्ठ. पङ्क्ति.

१९९ १० भिनयश्चैव
" १२ रुच्यते
२०७ १९ रत्नावल्या मुखं भवेत्
२०८ २१ 'लक्ष्यालक्ष्य' इत्यनन्तरं 'यथासागरिकायास्तु वत्सराजस्य दर्शनात्' इत्यधिकमस्ति
२१० १४ गर्भसंधिषु लोक्यतां
२४४ २ संगमोऽत्रानुरागो
" १४ तदुदाहरणं तावद्रत्नावल्यां प्रदर्शितम्
२५६ ८ अथोत्सुककथा
" १० नवभिर्वापि दशभिः
" १३ न कुंजरघटाघातं युद्धं तत्रोपवर्णयेत्
" १४ गोपीपतेर्विहरतो गोष्ठे बालस्य चेष्टितं यत्तु । यमलार्जुनादिदानवनिधनकृतं तत्तु गोष्ठी स्यात्
" २५ सल्लापकोऽप्रतिमुखः व्यक्तस्संधिचतुष्टये
२५७ ९ मौर्ख्यमेव च
" १२ जाड्यसंफेटे
" १३ प्ररोचना
२५८ १ निबोध इति
" ३ रिति स्मृतिः
" १७ रामनान्दी यथा कृता
" २२ विभूषितः प्रायः
" २३ परिच्छिन्नः
२५९ ६ स भग्नताळ तृतीये तु
" १५ इह शब्दः
" १६ शुद्धस्तत्सङ्करेण संकीर्णः
२६२ १४ मुखसंहतिसंयुता
" १६ विदूषकेण सहिता पीठमर्दविटान्विता
" १९ मिश्रोपनायकम्
" २१ दिनायकैर्युक्तं......चेटादिसंयुतम्
२६३ २ क्वचिद्धास्य
" ५ वणिग्वेश्या
" २३ (नाट्यरासकलक्षणे बहुधा भेदो दृश्यते यथास्मदीये कोशे "पूर्णनेपथ्यपात्रेण

पृष्ठ. पङ्क्ति.

नान्दी यत्र विधीयते।मुखादिसंन्धिसंभिन्नं क्वचिद्वृत्तिचतुष्टयम् । यत्र पात्राण्ययुग्मानि न कदाचन सूत्रधृत् । कल्योथवा नटनटीप्रवेशेनामुखक्रमः । दिव्यं वा मानुषं वाथ मिश्रं वा वस्तु यत्र च विप्रलंभरसप्रायं यच्च प्रख्यातनायकम् । कामिनीभिर्भुवो भर्तुश्चेष्टितं यत्र दृश्यते। रागाद्वसन्तमासाद्य स ज्ञेयो नाट्यरासकः । इत्यस्ति विभावनीयम् । )
२६५ १० "लब्ध्वादुग्धमहोदधौ-" इति पद्यानन्तरं रासकलक्षणे अत्रत्यकोशे अन्या एव कारिकाः दृश्यन्ते यथा–पिंडनात्तु भवेत्पिण्डी गूहनात् शृंखला भवेत् । भेदकोनालोलनावा ? जालेववचनाहृतः ? एते नृत्तात्मना कार्याः नाव्यवन्तः क्रियाविधौ । सुकुमारोद्धतैरंगैर्गायिकाभिर्विलक्षणाः । वाक्यस्यावधयो ह्येताः पिंडाद्या दृश्यजातयः । षोडश द्वादशाष्टौ वा नायिकास्त्वत्र रासके । अन्यद्रासकमेकाङ्कं सूत्रधारेण वंचितम् । सुश्लिष्टना ? द्वियुक्तं च पञ्चपात्रं त्रिसंधिमद् । पूर्णं भाषाविभाषाभिः कैशिकीभारतीयुतम् गर्भावमर्शशून्यं च मुख्यनायकनायिकम् । उदात्तभावविन्यासरासकं चेति केचन ॥ उल्लोप्यकं स्यादित्यादि–अग्रे
२६७ २ अथचाङ्कद्वयोपेतं
" ११ प्रथमांकः त्रिनाडिकः
" १८ सा स्यात्
" २२ मंथली
२६८ ९ वाभिसारिका
" १० रासकतालयुक्
" २० नायिका गणिकाथवा
२६९ १ कैशिकीभारतीयुतम्
" ८ शौरसेन्या च
" ११ एषा वा प्राकृतीमन्ये यथा कर्पूरमंजरी
२९६ ६ तोटकस्थितिवाक्यार्थ

पृष्ठ. पङ्क्ति.

२९६ ९ द्विधैव परिपठ्यते

" १० इत्यर्धस्य स्थाने "मार्गदेशीविभेदेन तद्वयं द्विविधं भवेत्" इतीदमर्धमस्ति

" १२ देशीभावे पुनस्ताललयैकाश्रय इत्यसौ

" १३ पुनरुक्तद्वयं द्वेधा

" १४ ताण्डवं भवेत्

" १८ क्त...लयसंयुतम्

" १९ ( मार्गदेशी इत्यर्धादनन्तरं "ताले गीते च वाद्ये च नृत्ते चाभिनयक्रमे। सुकुमारप्रयोगाङ्गकैशिकीवृत्तिसंयुतम्। ललितैरङ्गहारैश्च संयुतं लास्यमुच्यते" इत्यधिकमस्ति )

२९७ १२ पिडीबंधस्तु बहुधा ताण्डवस्य च

" १६ तदेव नियमेनेह

" १९ ङ्ग संयुक्तं गति

" २० कुंडलीनर्तनम्

२९८ ६ अभ्यन्तरे स्यात्स्त्रीवृन्दं बहिःस्त्रीपुंसश्रितम्। ७–१३ अर्धानां स्थाने "उद्धतैः करणैरंगहारैर्निर्वर्तितं यथा। वृत्तिरारभटी गीते कले तत्ताण्डवं विदुः" इत्यस्ति )

" १६ ग्रहश्चातीव कल्पितः

पृष्ठ. पङ्क्ति.

२९८ १७ रभटीवृत्तिः

( १७ अर्धादनन्तरं १८ अर्धात् पूर्वं नृत्तांगैः करणैरंगहारैस्तद्वीररौद्रयोः। ) इत्यर्धमस्ति

२९९ ५ एतत् स्यात् रौद्र

२९९ ८ द्रुतलंघितभूयिष्ठकरणभ्रमरीयुतः

" ११ शृङ्गारहास्य

" १४ प्रेरणं प्रेंखणं चेति

" २० समाजं वृन्दमित्या

३०० १ वृन्दमेतत्

" २ गातारो मुख्या द्वादश

" ३ अष्टौ च हालकाश्चापि ततः

" ६ षड्वाटिहालिकाः

" १० समगायकाः

" ११ गायकी

" १६ ओताकारद्वयं

" १९ गायकौ द्वौ चोताकारद्वयं तथा

३०२ ५ तयाक्षेपिकामता

" ६ चान्तरी

" ८ नानार्थरसयुक्तानां

" ९ प्रावेशिकी ध्रुवा

" १३ प्रासादकी

" १५ आन्तरी

" १९ सम्बन्धात् ध्रुवा यत्र ध्रुवेति सा

# शुद्धिपत्रम् ।

| पृष्ठ | पङ्क्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ६ | २० | ह्का | ह्का |
| १० | २ | शौय | शौर्य |
| १२ | ७ | विश्रा | मिश्रा |
| १३ | ४ | न्यर्घ | न्यर्धं |
| १६ | १८ | त | तः |
| २३ | २० | कुण | कूण |
| ३७ | ८ | पद | पदा |
| ४० | २० | क्कपि | क्कापि |
| ६६ | ८ | म्रूतः | म्रुतः |
| ७६ | ७ | नायि | नापि |
| ७७ | ५ | माम | मान |
| ७८ | ७ | खुख | सुख |
| ७९ | ९ | रोवे | रोधे |
| ८० | १७ | वोगि | योगि |
| १२५ | ५ | चव | चैव |
| १३८ | १० | वाल | लाव |
| १४० | ८ | पतिय | पतिर्य |
| १४७ | ९ | कृतप्रक्रि | अकृतप्रतिक्रि |
| १४७ | १६ | एवं मदेहमेते | [ एवमेदृहमेत्ते ] |
| १४९ | ७ | ह्यदेत्या | ह्यायदात्वा |
| ,, | ८ | र [त्कुरु] श | रश |
| ,, | १० | नृपैः [नेत्र] | त्रवेः |
| ,, | २२ | भदम् | भेंदम् |
| १७१ | ९ | क्यादा | क्यादौ |
| १७५ | ३ | पर्यं | त्पर्यं |
| ,, | ४ | कयि | कथि |
| १७६ | १३ | स्तीस्ति | स्तीति |
| १७७ | ९ | त्घर्मः | धर्मः |
| ,, | १९ | पूप | घूप |
| ,, | २० | वर्णे | २० वर्णे |
| १८० | १० | पृथक | पृथक् |
| १८७ | १० | ज्ञन्तु | ज्ञान्तुं |
| २०० | ४ | यदा हि | यथा हि |
| ,, | ९ | क्रि | क्लि |
| २०४ | ८ | रुपो | रूपो |
| २०५ | ११ | रचिते | रचरिते |
| ,, | १८ | क्तिम | क्तिकम |
| २०७ | ९ | पश्वा | पश्वा |
| २०८ | २ | रुपे | रूपे |
| २१२ | १८ | रोघ | बोध |
| २२७ | ६ | नप | नृप |
| २२९ | ४ | नटी | नटीं |
| २३२ | ११ | घि | न्धि |
| २३७ | ५ | तेद | तद |
| २४६ | १५ | ताल | काल |
| २५४ | ८ | मन्ध | मन्द |
| २५६ | १४ | गोष्ठ | गोष्ठे |
| ,, | ,, | चेष्टितम् । | चेष्टितं यत्तु । |
| ,, | १५ | यत्तु यम | यम |
| २९९ | १७ | तश्व | तैश्व |
| २६२ | २३ | नाव्यरासकम् | नाव्य ? रासकम् |
| २६५ | १४ | रासकम् | ...... |
| २८९ | २१ | नयः | नयैः |
| २८८ | १६ | स्व | स्स्व |
| ३०६ | १३ | दौहृद | दोहद |
| ३०७ | १९ | त | ते |
| ३१२ | ४ | प्राया | प्रायां |
| ३१५ | ४ | शृ, प्र ७. १६. | का. मी. ३१ |
| ३२२ | १२ | हेम.का. प. ३०४ | शृङ्गारतिलक. १. ४४ |